## संस्कृतकविताया वाचिकी परम्परा :

सुविदितमेवैतद् यत् अनादिकालादेव साक्षात्कृतधर्माण ऋषयो वेदान् वाचिकपरम्परया धारयाम्बभूवुः। अत एव वेदानां श्रुतिरिति संज्ञा। लौकिकमपि संस्कृतकाव्यम् इतिहासपुराणादिकं च आसहस्राब्दं वाचिकपरम्परायामेव पल्लवितम्। सूताः कुशीलवा वा इतिहासपुराणादिकं गायं गायं पाठं पाठं वा काव्यपरम्परामातेनुः। लिपिबद्धकाव्यस्य वाचिकपरम्परासंवर्धितकाव्यस्य च भवति शिल्प-सङ्घटना-वस्तुवर्णनादिदृष्ट्या विशेषः। अयं विशेषः लौकिकसंस्कृतकाव्य आमूलात् समुल्लसति स्म। अतएव लौकिककाव्यास्यापि वेदवत् प्राचीनत्वं श्रुतिसिद्धत्वं चोरीकृतम्। तथा चोक्तमथर्ववेदे-

> 'स बृहतीं दिशमनुव्यचलत्। तमितिहासः पुराणं
> च गाथाश्च नाराशंसीश्चानुव्यचलन्। इतिहासस्य
> च वै पुराणस्य च गाथानां च नाराशंसीनां च
> प्रियं धाम भवति य एवं वेद।' (१५/६/११)

आ वैदिककालाद् "गाथा"-काव्यं लोकेषु अतितरां प्रचलनमवापेति रामायणेन महाभारतेन च विज्ञायते। यथाऽद्यत्वे विविधलोकभाषासु जना लोकगीतानि गायन्ति, तथा तदानीमगीयन्त गाथाः। आबालवृद्धाः स्त्रियः पुरुषा गाथाभिरहृष्यन्त अरज्यन्त च।

यथा गाथा तथैवाख्यानोपाख्यानानि इतिहासपुराणानि च आ वैदिककालादेव कविभिः सूतैः पौराणिकैरुद्भावितानि जनतासु गायं गायं लोकप्रियत्वं च नीतानि। महर्षिपाणिनेरष्टाध्याय्यामाख्यानाख्यायिकेतिहासपुराणानामुल्लेखोऽपि मतमिदं द्रढयति। य एव सूता वैदिककाले यज्ञविधौ नृत्ताद्यनुष्ठानाय[1] समाहूतास्त एव आख्यान-पुराणादिकस्य विस्तारं व्यदधुः। तथा च सूतर्षिणा नैमिषे अष्टादशपुराणानि समहाभारतानि महर्षीणां शौनकादीनां समक्षं समाख्यातानि। वैदिकयज्ञसम्बद्ध एव सूतो रथकारः स्थपतिर्वास्तुकारः काव्यनिर्माता इतिहासपुराणादिव्याख्याता च बभूवेति महाभारते जन्मेजयनागयज्ञानुष्ठाने यज्ञवेदिकानिर्माणाय समाहूतस्य सूतस्य वर्णनमिदं सूचयति-

> स्थपतिर्बुद्धिसम्पन्नो वास्तुविद्याविशारदः।
> अत्यब्रतीत् सूत्रधारः सूतः पौराणिकस्तथा।। (आदिपर्वणि,)

अत एव लौकिकसंस्कृतकाव्यस्योद्भवे विस्तारे चास्य सूतस्य अतिमहदवदानं वर्तत इति न संशीतिः।

अन्यत्राथर्वणि एव पुराणस्य चृछन्दसां च समुद्भवः ब्रह्ममुखाद् व्यावर्णितः-

---

१. यजुर्वेदे ३०। ६

ऋचः सामानि च्छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः।।
(अथर्व. ११/७/२४)

याज्ञिकानुष्ठानेषु यथा वेदमन्त्रास्तथैव पुराणाङ्गभूतान्याख्यानोपाख्यानान्यपि विनियोजितानि। अश्वमेधयज्ञ आसंवत्सरान्तं पारिप्लवाख्यानानां वीणागाथिभिर्गायनं वर्णितमेव, राजेन्द्रप्रसादहाजरा महोदयस्तु तदेव लौकिकसंस्कृतकाव्यपरम्पराया मूलमिति स्थापयति।

वस्तुतस्तु वैदिकसंहितासु विशेषतः ऋग्वेदे भारतीयकविताया यः प्रकृष्टः प्रथमावतारः सञ्जातः स एव लौकिकसंस्कृतकाव्यसमुद्भवस्यापि प्रेरयिता प्रवर्तकश्च बभूवेति महाकाव्य-गीति-काव्यविषयकाध्याययोरिह प्रबन्धे सोदाहरणं विवेचितमेव। इयं वैदिकसंहिताभ्यः प्रसृता लौकिकसंस्कृतकाव्यपरम्परा वाचिकरूपेणैव प्रथमं समुल्ललास। पश्चाच्च सूतेषु केचन ग्रन्थिकाः समजायन्त, ते ग्रन्थेभ्यः पुराणाख्यानादीन्यपठन्। महाभारते ग्रन्थिकस्योल्लेखः नट-नर्तक-सूत-मल्लझल्लादिभिः सह विहितः। भोजराजेन च आख्यानोपाख्यानलक्षणे ग्रन्थिकस्य कर्तृत्वमित्थं विवेचितम्-

नलसावित्रीषोडशराजोपचारवत् प्रबन्धान्तः।
अन्यप्रबोधनार्थं यदुपाख्याति तदुपाख्यानम्।।
आख्यानसत्तां तल्लभते यद्यभिनयन् पठन् गायन्।
ग्रन्थिक एषः कथयति गोविन्दवदवहिते सदसि।।

## वाचिकपरम्परायाः कवयः

वाल्मीकिर्व्यासश्चास्याः वाचिककाव्यपरम्परायाः लौकिकसंस्कृतसाहित्ये प्रेरकौ प्रवर्तकौ च स्तः। अन्येऽपि केचन कवयः पुरातनवाङ्मये सनामग्राहं स्मृताः। केचन विद्वांसः वाल्मीकेः प्राग् विरचितं च्यवनर्षिणापि रामायणमिति मन्यन्ते, अश्वघोषस्योल्लेखं च तत्र प्रमाणयन्ति।[1] महाभारते शम्याक-मङ्किविदेहजनकप्रभृतयः वाचिकपरम्पराया गाथाकाव्यकारा अनेकत्र उद्धृताः। वाल्मीकिरपि एवमेव महाभारतकारैः स्मृतः उदाहृतश्च तत्कर्तृकत्वेन श्लोकः।

उशनाकविः शुक्रो वा वाचिककाव्यपरम्परायां सर्वाधिकं स्मर्यते स्म इत्यपि महाभारतीयैरेवोल्लेखैः प्रतीयते। उशनसा प्रणीता गाथा भारते बहुशस्तन्नामनिर्देशपुरस्सरं प्रस्तुताः तथाहि-

अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु।।
पुनरावर्तमानानां भग्नानां जीवितैषिणाम्।

---

१. वाल्मीकिरादौ च ससर्ज काव्यं जग्रन्थ यन्न च्यवनो महर्षिः।।-बुद्धचरिते १।४३

भेतव्यमरिशेषाणामेकायनगता हि ते।। (शल्यपर्वणि, ५७/१२,१३)

उशना चाथ गाथे द्वे प्रह्लादायाब्रवीत् पुरा।
ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा।
ते श्रद्दधाना वध्यन्ते मधु शुष्कतृणैर्यथा।।
(शान्ति. ३७/६६, ६७)
श्लोकश्चोशनसा गीतो पुरा तात महर्षिणा (शान्ति १६७/१)
भगवानुशना चाह श्लोकमत्र विशाम्पते।। (शान्ति. ५७/२)

वाचिककाव्यपरम्परायामासीदुशनस एतादृशो बहुमानो यत् कविः काव्यश्चास्यैव पर्यायौ सञ्जातौ। "कविर्वाल्मीकिशुक्रयोः (मेदिनी.१२०/४), काव्यं ग्रन्थे पुमान् शुक्रे (तत्रैव ११३/११), शुक्रो देवगुरुः काव्य उशना भार्गवः कविः (अमर. १/३/२५)-इति कोशकाराणामुक्तेः। विभूतियोगे चाह भगवान् श्रीकृष्णः-"कवीनामुशनाकवि'रिति। सोऽयमुशना अध्याय-सहस्रमरचयत् वाक्यात्मकमिति "अध्यायानां सहस्रेण काव्यः सङ्क्षेपमब्रवी"दिति महाभारतादेव विज्ञायते (राजधर्मपर्वणि ५१/११)।

लिप्यामाविष्कृतायां प्रचलिते सत्यपि लेखनविधौ काव्यं तु वाचिकपरम्परया कर्णाकर्णिकया यथा प्रसारमाप, न तथा पाठ्यत्वेन। अत एव श्रव्यकाव्यमिति काव्यप्रकार आचार्यैर्व्यपदिष्टो न पाठ्यकाव्यमिति। सहृदयानां समाजे कविगोष्ठीसु राजसभासु वा काव्यमश्रूयत। कामसूत्रकारा वात्स्यायनमुनयो वर्णयन्ति सरस्वतीभवने आयोजितं समाजम्, यत्र काव्यपाठाय कवय आहूताः। राजसभासु राजानोऽपि सबहुमानं कवीन् काव्यपाठाय न्यमन्त्रयन्। प्रसिद्ध एव खारवेल-समुद्र-गुप्त-श्रीहर्ष-प्रभृति भूभुजां काव्यक्रियां प्रति समादरः सहृदयत्वं च।

संस्कृतकाव्यधारा वाचिकपरम्परायामेव सर्वदा सर्वथा प्रकृष्यते स्म। एतस्माच्च कारणात् श्रव्यत्वं गुणः श्रुतिकटुत्वदोषनिराकरणं तत्र सदैवापेक्ष्यते स्म। सानुप्रासपदावली शब्दसौष्ठवं वर्णसावर्ण्यरम्यता चास्यां काव्यधारायां विकासमाप। कविनापि पाठविधिः सम्यग् ज्ञातव्योऽभूत्, अन्यथा सर्वथोत्कृष्टमपि काव्यमपपाठपुरस्कृतं विदग्धगोष्ठीसु न प्रशंसापदं स्यात्।

राजशेखरस्त्वाह-

करोति काव्यं प्रायेण संस्कृतात्मा यथा तथा।
पठितुं वेत्ति यः स परं तस्य सिद्धा सरस्वती
यथा जन्मान्तराभ्यासात् कण्ठे कस्यापि रिक्तता।
तथैव पाठसौन्दर्यं नैकजन्मविनिर्मितम्।।
(काव्यमीमांसायां सप्तमेऽध्याये)

**प्राचीनकवीनां कोटयः**

वैदिकसंहितासु मन्त्रद्रष्टार ऋषयः कविशब्देन व्यपदिष्टाः। तैर्दर्शिता मन्त्रा अपि

काव्यमिति संज्ञप्ताः। तदानीं कविरिति पदं चैतन्यस्य परां काष्ठामसूचयत्। उक्तं च-कविर्मनीषी परिभूः स्वयम्भूः....(शुक्लयजुर्वेदे ४०/१/८)

मन्त्रात्मकं काव्यं देवताया आविर्भावाय क्षमते स्म। तेन देवा भाविताः। अग्निमधिकृत्य वक्ति ऋषिः-स वावृधे काव्येन...

वैदिक काल एव आख्यानपुराणादिप्रस्तावकाः सूताः पौराणिका वाऽऽत्मनोऽवदानं विशदयाञ्चक्रुः। इमे मन्त्रद्रष्टारो नासन्, लोकपरम्परायां सञ्चितं वाङ्मयमहानिधिमिमेऽरक्षन्न-वर्धयंश्च। परवर्तिकाले राजसभासु नृपाः कविभ्य आश्रयमददुः। इत्थं संस्कृतकाव्य-परम्परायामार्षकवयः, सूतकवयः, राजाश्रिताः कवयो लोककवयश्चेति बहुविधाः कवयः स्वं स्वं रचनाकर्म प्रकटयाम्बभूवुः।

प्रातिभोन्मेषतारतम्यवशादपि नानाविधाः कवयः समजायन्त। अङ्गुत्तरनिकाये (२/२३०) काव्यरचनाप्रक्रियाभेदेन चतुर्विधाः कवयः परिगणिताः-सूतकविः, अर्थकविः, प्रतिभानक-विश्चिन्ताकविश्चेति। यः पुरातनमाख्यातजातं जनसमाजस्य पुरः प्रस्तौति स सूतकविः। प्रतिभानकविर्यथादृष्टं वर्णयति। अर्थकविः काव्यद्वारेण पुरुषार्थमुपदिशति। चिन्ताकविः समाधौ उदात्तं कवयति।

प्रतिभावन्त एव कवयन्ति। प्रतिभा तु पूर्वजन्मार्जितः संस्कारविशेषः। प्रतिभापरिस्पन्द-भूतमलौकिकवर्णनमयं वस्तु काव्यम्। परन्तु राजसभासु कविपदं प्राप्तुमभिलषन्तः प्रायः अभ्यासाद् व्युत्पत्या वा कवयन्ति स्म। भामहेन "काव्यं तु जायते जातु कस्यचित् प्रतिभावत" इति वदता प्रतिभाया अविनाभाव ऊरीकृतः काव्यकर्मणि। दण्डिना तु-

न विद्यते यद्यपि पूर्ववासना<br>
गुणानुबन्धि प्रतिभानमद्भुतम्।<br>
कृशे कवित्वेऽपि जनाः कृतश्रमा<br>
विदग्धगोष्ठीषु विहर्तुमीशते।।

इति वदता प्रतिभामृतेऽपि काव्यनिष्पत्तिः स्वीकृता। तेन प्रतिभाकविः व्युत्पत्तिकविरिति कोटिद्वयं स्वयमुदियाय कविसमवाये। राजसभासु पण्डितानां विदग्धानां बाहुल्यात् शास्त्राणामनुशीलनं कविनाऽवश्यमेव करणीयभूत्, ऋते विविधशास्त्रपरिज्ञानात् पण्डितसभासु अभिरूपभूयिष्ठासु परिषत्सु वा पठ्यमानं तदीयं काव्यमुपहासास्पदं स्यात्। राजशेखरस्तु "प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यत" इति निगदन् व्युत्पत्तेरवश्यम्भावितां स्वीचकार। तथापि काव्यक्रियायां क्वचिद् व्युत्पत्तेः समधिकतरं विनियोगः, क्वचित् प्रतिभाया अधिक उन्मेष इति भवति भेदः। तद्दृष्ट्या राजशेखरेण तिस्रः कविकोटयो निर्मिताः-शास्त्रकविः काव्यकविरुभयकविश्चेति। शास्त्रं रचयति, शास्त्रे काव्यं काव्ये वा शास्त्रं सङ्क्रामयतीति भेदेन शास्त्रकविरपि त्रिधा।

संस्कृतकविपरम्परायां शास्त्रानुशीलनविशदशेमुषीकाः सुकवयो बहवो बभूवुः, यानुपलक्ष्य आभाणकोऽयं प्रचचाल-

**विद्वत्कवयः कवयः केवलकवयस्तु केवलं कवयः।**
**कुलजा या सा जाया केवलजाया तु केवलं जाया।।**

इति। अस्मिन् ग्रन्थे भारवि-माघ-श्रीहर्ष-रत्नाकर-प्रभृति-कवीनां शास्त्रपाण्डित्यं यथावसरं विचारतिमेव। परन्तु काव्यद्वारेण शास्त्रमेव प्रथयन्तोऽपि कवयो बहव आसन्। भट्टिकाव्यादिभिः परिपोषितायाः शास्त्रकाव्यपरम्परायाः परिशीलनमपि पृथगध्यायेऽस्माभिरिह शास्त्रकविमहिमानं विचार्येह विधीयते।

प्रतिभाव्युत्पत्योरधिगमतारतम्यमुपलक्ष्य बुद्धिमानाहार्यबुद्धिरौपदेशिक इति त्रिविधाः, तेष्वपि कविकर्मकौशलभेदेन रचनाकविः, शब्दकविरर्थकविरलङ्कारकविरुक्तिकवी रसकविर्मार्गकविः शास्त्रार्थकविरित्यष्टधा तेषु च काव्यविद्यास्नातकः हृदयकविः अन्यापदेशी सेविता घटमानो महाकविः कविराज आवेशिकोऽविच्छेदी सङ्क्रामयिता चेति दशधा कवीनां वर्गीकरणं चक्रे यायावरीयो राजशेखरः।[1]

शिङ्गभूपालस्तु कविप्रकृतिदृशा उदात्त उद्धतः प्रौढो विनीत इति चतुर्विधं कविं निरूपयति।[2] तत्र कालिदासादिषु औदात्यं विनयश्च, श्रीहर्षादिषु प्रौढत्वमौद्धत्यं च चकास्ति।

### लक्ष्यलक्षणयोः सम्बन्धः

लक्ष्यानुसारमेव लक्षणग्रन्था निर्मीयन्ते व्यवस्थाप्यन्ते च लक्षणानि। साहित्यपरम्परायां प्रतिभाजुषां महाकवीनां काव्यानि लक्ष्यभूतानि भवन्ति, तदनुसारमेव परिकल्प्यन्ते लक्षणानि। संस्कृतसाहित्ये वाल्मीकिव्यासकालिदासादयः तत्त्वदर्शिनः कवयः लक्ष्यं काव्यमानदण्डान् वा स्थापयाम्बभूवुर्यदवधार्य आचार्या लक्षणानि निरधारयन्। तथा चोक्तमानन्दवर्धनाचार्येण-

**रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धिव्यवहारं लक्षयतां सहृदयानाम्.... (ध्वन्यालोके १।१ वृत्तौ)**

आर्षकवीनां काव्यं गाढं गाढमेव आचार्यः काव्यशास्त्रसिद्धान्तान् निश्चिनोतीत्यपि आनन्दवर्धनः स्वीकुरुते। तद्यथा-

**वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः**
**तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः।। (ध्वन्या. ३।१६)**

परवर्तिनः कवयस्तु आचार्यैर्निर्धारितान् राद्धान्तान् परिभाव्य तदनुसारं काव्यकर्मणि प्रवृत्ताः, प्रतिभासम्पन्नाः सुकवयः शास्त्रबाह्यं कवयन्तः क्वचिन्नवीनसिद्धान्तनिर्धारणाय आचार्याणां प्रेरयितारोऽभूवन्। इत्थं लक्ष्यलक्षणयोः पारस्परिकः पोष्यपोषकभावोऽनुग्राह्यानुग्राहकभावो वा उभयथा घटमानः संस्कृतकाव्यपरम्परां संवर्धयाञ्चकार। तथाहि- महाकाव्यस्य सर्गबन्ध इति

---

१. काव्यमीमांसायाम्, पञ्चमाध्याये।
२. रसार्णवसुधाकरे तृतीये विलासे-१४६-४७

संज्ञा रामायणे काण्डानां सर्गेषु विभाजनेनायाता स्यात्। तथैव महाकाव्यमिति काव्यविधाविशेषस्य नामकरणम्-

**कर्ता काव्यस्य महतः क्व चासौ मुनिपुङ्गवः -रामायणे १।७४।२३**
**महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते (महाभा. आदि. १।२०६)**

इति इतिहासद्वये महत्पदप्रयोगात् अधिगतमाचार्यैरित्यनुमातुं सुकरम्।

महाकाव्ये महाकुलप्रसूते धीरोदात्तो भवेन्नायक इति नियमेन पाणिनि-प्रणीत-जाम्बवतीविजयप्रभृतिपुरातनमहाकाव्येभ्य आगतेन भवितव्यम्। परन्तु 'एकवंशभवा भूपा कुलजा बहवोऽपि वे' ति यो विकल्पो नायकविषये विश्वनाथेनायोजि, तस्य स्रोतः वरीवर्ति कालिदासस्य रघुवंशमहाकाव्यमेव।

कालिदासस्यैव ऋतुसंहारमेघदूत उपजीव्य सङ्घातादयः काव्यप्रकारा आचार्यैरुद्भाविताः। मुक्तकमधिकृत्य आचार्येषु प्रचलितां धारणाममरुकः स्वकृतित्वेन परिवर्तयामासेति विस्तरशोऽत्र निरूपितमेव मुक्तकविषयकेऽध्याये।

अलङ्कार-गुण-रीति-काव्यपाक-पदशय्याद्या नाना काव्यकोटयो या आचार्यैर्निरूपितास्तासां प्रभवस्थानं सुकवीनामुत्तमकाव्यमेव। नाट्यशास्त्रे भरतमुनिश्चतुरोऽलङ्कारान् लक्षयामास। ते यथा उपमा, दीपकं, यमकं रूपकञ्च। दण्डिना ३७, भामहेन ४३, उद्भटेन ४८, आनन्दवर्धनेन ५०, रुद्रटेन ८३, भोजेन १११, मम्मटेन १०४, रुय्यकेन १२०, शोभाकरमित्रेण १५७, जयदेवेन १७८, विश्वनाथेन १८०, अप्पयदीक्षितेन च २०१ अलङ्कारा निरूपिता उल्लिखिता वेति तत्र उत्तरोत्तरसंख्यावृद्धेः कारणमपि संस्कृतकाव्यपरम्पराया विकासस्तदनुशीलनं च वर्तते।

कविप्रतिभाया विशिष्टाऽभिव्यक्तिः, तद्वशादुन्मीलितं पदार्थस्य अलौकिकं रूपं च कविसमयं निर्माति। राजशेखरस्तु कविसमयविषये कविबद्धमेव प्रमाणतया अमंस्त आह च-

**देशेषु पदार्थानां व्यत्यासो दृश्यते स्वरूपस्य।**
**तन्न तथा बध्नीयात् कविबद्धमिह प्रमाणं नः।।**
**(काव्यमीमांसा अ. १८)**

काव्यास्वाददृशा महाकवीनां रचनासु अनुभूयमानं तारतम्यमपि काव्यपाकविवेचनाय प्रेरयामास आलङ्कारिकान् वामनराजशेखरादीन्। एवमेव ध्वनिप्रस्थानस्य तथैवौचित्यप्रस्थानस्यापि विचारदर्शनं काव्यभूमिकात एव उद्बिभेदेति स्फुटमेव।

## पालिप्राकृतापभ्रंशकाव्यैः संवादः

आ वेदसंहिताभ्यः संस्कृतवाङ्मयमेव पालिप्राकृतादिभाषासु विरच्यमाणस्य विपुलसाहित्यस्य प्रेरकं चोपजीव्यं च बभूव, तेनानुप्राणितमितरभाषासु रचनाकर्म। अनन्तरं च आ

बुद्धमहावीरयोराविर्भावात् संस्कृत - पालि -प्राकृत - भाषासु साहित्यरचना समं समुल्ललास। एतासां भाषाणां कवयः शास्त्रकाराः परस्परं भावयन्तः पूर्वसूरिणां दायमूरीकुर्वन्तः सरस्वतीमसेवन्त साहित्यभाण्डारं च समृद्धिमनयन्त। यदि प्रवरसेन-पुष्पदन्त-प्रभृतयः प्राकृतापभ्रंशकवयः संस्कृत-महाकविभ्यः प्रभावितास्तर्हि सातवाहनहालेन सङ्कलिता ''गाहासत्तसई'' संस्कृतमुक्तकेष्ववितथां प्रभावमुद्रामङ्कयामास। अमरुकादिकविषु प्राकृतगाथासाहित्यस्य भावसाम्यं तत्प्रतिफलनं वाऽस्मिन् ग्रन्थे मुक्तककाव्यविषयकेऽध्याये विचारितमेव। आर्यासप्तशतीकारो महाकविर्गोवर्धनस्तु स्फुटमेव ऊरीकरोति प्राकृतगाथानां श्रेष्ठतां तासां स्वरचनासु प्रभावञ्च।

अन्यच्च बहवो महाकवयः संस्कृतप्राकृतादिभाषासु समाननैपुण्येन कवयामासुः। आचार्य आनन्दवर्धनः संस्कृते देवीशतकं नाम चित्रकाव्यकौशलकलान्वितं स्तोत्रं कलयामास, ए एव प्राकृते विषमबाणलीलां नाम प्रसादगुणप्राञ्जलां रचनामपि ससर्ज। सेतुबन्धकारस्य प्रवरसेनस्य विलसन्ति संस्कृते सुभाषितश्लोकाः। तथैव 'गउडवहो'-महाकाव्यकर्तुर्वाक्पतिराजस्यापि। संस्कृतमहाकवयोऽपि प्राकृतकाव्यं प्रति बहुमानपरा अभूवन्। तथा चोक्तं राजशेखरेण-

**गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः। -बालरामायणे १.११**
**परुसा सक्कहबंधा पाउवबंधो वि होइ सुउमारो। -कर्पूरमंजर्याम् १।८**

सत्यामपि पालिप्राकृतयोः प्रचुरकाव्यरचनायां न तत्र काव्यशास्त्राणां तथा निर्माणमभूद् यथा संस्कृते। चिन्तनस्य शास्त्रविवेचनस्य च भाषा तु सदैव संस्कृता एव बभूव। संस्कृत-काव्यशास्त्रस्य आचार्यैरपि लक्षणनिरूपणे प्राकृतगाथा अहमहमिकया उदाहृताः। आनन्दवर्धनः स्वोपज्ञप्राकृतकाव्यविषमबाणलीलातः स्वत एवोदाहरति ध्वन्यालोकवृत्तौ गाथाः। मम्मटादयोऽप्यालङ्कारिका उत्तमकाव्यमुदाहरन्ति प्राकृतगाथाभ्यः प्रायशः। भोजराजस्तु शृङ्गारप्रकाश-सरस्वती-कण्ठाभरणयोः प्रायशः प्राकृतगाथासहस्रमुदुदधार। वस्तुतः संस्कृतकाव्यशास्त्राचार्या अतिविपुलामन्यथाविलुप्तां प्राकृतकाव्यसम्पदमुद्धरणैरुद्धरन्तो ररक्षुरिति निश्चप्रचम्।

पालित्रिपिटकवाङ्मयान्तवर्तिनी दार्शनिक विचारधारा चिन्तनसरणिर्वा संस्कृतकाव्येषु न न स्वप्रभावमुट्टङ्कयाञ्चकार। केचन विद्वांसः सन्देशकाव्यपरम्पराया मूलं तत्रैव पश्यन्ति। अश्वघोषस्य महाकाव्यद्वये पद्यचूडामणौ वा बुद्धघोषप्रणीते तथा कफ्फिणाभ्युदये वा पालिबौद्धसाहित्यस्य प्रभावः स्फुटतितराम्।

## संस्कृतकाव्येषु भारतीयताया अभिज्ञानम्

संस्कृतवाङ्मये भारतराष्ट्रस्यात्मा सर्वाङ्गसुन्दरं सङ्क्रान्त इति न संशीतिः। तत्रापि तदीयं सर्वथा ललितरमणीयं कमनीयं हृद्यनिरवद्यं च रूपं संस्कृतकाव्येष्वभिव्यक्तिमुपागतम्। भारतानां भौगोलिकं स्वरूपम् आध्यात्मिकं वैभवं शास्त्रचिन्तनं जीवनदर्शनं चैतत् सर्वं संस्कृतकवय आत्मसात् कृत्वा ललितं प्रकटीचक्रुः काव्यरीत्या।

भूगोलदृष्ट्या आसेतुहिमाचलं आगान्धारकामरूपं रूपमस्य राष्ट्रस्य संस्कृतकवीनां कृते काम्यमभवत् तदेव च पुराणकारा अपि निरदिशन्-

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती तत्र सन्ततिः।।
(विष्णुपुराणे २।३।१, ब्रह्मपुराणे १९।१)

पूर्वापरौ तोयनिधी वगाह्य पृथिव्या मानदण्डस्येव हिमालयस्य रम्यमुज्ज्वलचित्रमङ्कितं कुमारसम्भवे कविकुलगुरुणा, तथैव रघुवंशे क्वचिद् वङ्क्षुतीरे क्वचित् कामरूपेषु क्वचित् केरलेषु भृशं भ्रमणमकारि तेन। मेघदूतयात्रापथं निरूपयता च महाकविनाऽस्य देशस्य पावनानि तीर्थस्थलानि, नद्यः पर्वता, नगराणि च स्वलेखन्या सजीवानीव परिस्फुरन्ति चक्षुःसमक्षमवतारितानि। कालिदासो वस्तुतोऽस्माकं राष्ट्रकविरिति शक्यते वक्तुम्। अस्य देशस्य ऋतवो निसर्गरामणीयकं नगरजीवनं ग्रामजीवनं च यथा चित्रीकृतं महाकविभिस्तदस्मिन् प्रबन्धे यथाप्रसङ्गं निर्दिष्टमेव।

प्रकृत्याऽतीव रमणीयो भारतदेशो यत्र कामपि कमनीयां छटां प्रकटयन्ती नरीनृत्यति निसर्गनटी। महाकवयस्तु निसर्गसौन्दर्यमिह दर्शं दर्शं तदाकाराकारितां तत्तादात्म्यं चानुभवन्ति स्म।

निसर्गतादात्म्यावच्छिन्नचेतसस्तेऽनूचानाः सुकवय ऋतम् आनन्दं च साक्षाच्चक्रुः। तदेव तेषां मनीषासु परमं तत्त्वमिति भावितम्। उक्तं चोपनिषदि- "रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्दं प्रयन्त्यभिसंविशन्ति चेति।" काव्यानुभूतौ अयमेवानन्दो रस इति व्यपदेशेन व्यवस्थापित आलङ्कारिकैः। अतएव काव्यसृष्टेरीश्वरसृष्टिसमकक्षत्वं कवेश्च ऋषितुल्यता समाख्याता। उक्तमेव भट्टतौतेन-

नानृषिः कविरित्युक्त ऋषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्।
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः। इति।

अयमानन्दः समग्रायामपि सृष्टौ अनुस्यूतः। ईश्वरोऽपि समग्रसृष्टौ तथैव विलसति। अस्यैव जगतः सौन्दर्ये आनन्दानुभूतौ चेश्वरस्य साक्षात्कारः। संस्कृतकवयस्तु ईश्वरं जगति अवतरन्तम् अवतितीर्षन्तं च चित्रयाञ्चक्रुः, जागतिकभावैः स्पृष्टं तं प्रदर्शयामासुः। तथा चाह कालिदासः

स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार।। (कुमारसम्भवे १।५७)

तथा-

कमपरमवशं न विप्रकुर्यु-
र्विभुमपि यदमी स्पृशन्ति भावाः।। (तत्रैव ६।९५)

भक्तोऽपि कविः क्वचिदीश्वरमुपालभते, क्वचिच्च पारिवारिकसम्बन्धैर्बन्धयति तम्। यथा निसर्गमनुष्ययोस्तथा देवत्व- मानवत्वयोर्नैकट्यमिह प्रत्यक्षमनुभूयते।

अतश्च मनुष्यस्य महती प्रतिष्ठाऽस्माकं साहित्ये विद्यते। देवास्तस्मै स्पृहयन्ति। देवानप्यसौ क्वचित् प्रत्यादिशति। तथा च कालिदासीयो रघुरिन्द्रमाह -

ग्रहाण शस्त्रं यदि सर्ग एष ते
न खल्वनिर्जित्य रघुं कृती भवान्।। (रघुवंशे ३।५१)
पुराणेष्वपि प्रतिपादितमेतदेव विशदम्-
देवानामपि विप्रर्षे सदैवैष मनोरथः।
अपि मानुष्यमाप्स्यामो देवत्वात् प्रच्युताः क्षितौ।
मनुष्यः कुरुते तत् तु यन्न शक्यं सुरासुरैः।।
(मार्कण्डेयपु. ५७।६३)

तथा च-

अद्यापि देवा इच्छन्ति जन्म भारतभूतले।
कदा पुण्येन महतः प्राप्स्यामः परमं पदम्।।
(बृहन्नारदीये ३।५१)

जीवनस्य यत् सर्वाङ्गरम्यमुदात्तं रूपं मनुष्यलोकेऽवलोक्यते तत्र स्वर्गादावपि सुलभमिति मन्यमाना महर्षयो मनुष्यस्याभ्युदयनिःश्रेयससिद्धिं निदर्शयामासुः। तेन पुरुषार्थचतुष्टयम् आश्रमचतुष्टयी च तैर्व्यवस्थापिता गुणकर्मविभागश्चातुर्वर्ण्यं च परिकल्पितम्। इमा भारतीया अवधारणाः संस्कृतकाव्येष्वपि प्रतिफलिताः। कालिदासीयनायकानाम्-

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।

चरित्रे इयमेव रीतिः। आलङ्कारिका अपि पुरुषार्थचतुष्टयसिद्धिं काव्यानुशीलनेनाहुः। उक्तं हि भामहेन-

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च
प्रीतिं करोति कीर्तिं च साधु काव्यनिषेवणम्।।
(काव्यालङ्कारे १.२)

कुन्तकोऽपि सहृदयहृदयाह्लादकारकं काव्यबन्धं धर्मादिसाधनोपायममंस्त (वक्रोक्तिजीविते १।३)

यद्यपि काव्येषु सर्वत्र रसप्रतीतिरेव परिणतिस्तथापि "रामादिवद् वर्तितव्यं न रावणादिवदि"-त्याद्युपदेशसंवलिता पुरुषार्थसिद्धिः सर्वत्रैव काव्यानुभूतौ परोक्षतयाऽनुषक्ता। वस्तुतो भारतीयं जीवनदर्शनं धारयन्त्येव संस्कृतकाव्यानि रसात्मकबोधं प्रत्याययन्ति। भारतीयजीवनदृष्टौ कालस्य विशिष्ट एव बोधो विलसति। अथर्ववेदस्य कालसूक्ते (१९।५३) विशदं निरूपितोऽयं कालबोधस्तद्यथा तत्राद्यो मन्त्रः-

**कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजिरो भूरिरेताः।**
**तमारोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा।।**

निखिलमपि भुवनमण्डलं भ्रमयन्तं कालाश्वं कवयो विपश्चितश्चारोहन्ति, त एव कालमतिक्रान्तुं क्षमन्ते। यदुक्तं कह्लणेन-

**कोऽन्यं कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः।**
**कविप्रजापतींस्त्यक्त्वा रम्यनिर्माणशालिनः।।**
(राजतरङ्गिण्याम् १।९)

कालचक्रस्यावर्तनं विवर्तनं च विविधं विशदयन्ति संस्कृतकवयः काव्यप्रसङ्गैः। कालातिक्रमणक्षमा प्रज्ञा नरं नैराश्यगर्ते निपतन्तमुत्थापयति, नात्मानमवसादयेदिति भावं हृदयङ्गमयति। मेघदूतीयो यक्ष एतस्या भावभूमेः साक्षान्निदर्शनम्। स आह -

**कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा**
**नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।।** (उ.मे. ५२)

कालविषये विशिष्टेयं दृष्टिर्न स्थूलजगतो नश्वरसत्तायां रमयति, 'एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु' इति रघुवंशद्वितीयसर्गे कविवचः प्रामाण्यात्। कालिदासादिषु शृङ्गारस्यैवैकपक्षमयं चित्रणमिति यदाधुनिकाः केचन कथयन्ति तदपि न विचारसहम्। रघुवंशेऽग्निवर्णस्य निमर्यादं कामोपभोगो यथा ताटस्थ्येन कविना चित्रितस्थैव प्रादर्शि तदीया बीभत्सा परिणतिरपि-

**तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना।**
**राजयक्ष्मपरिहानिराययौ कामयानसमवस्थया तुलाम्।।** (रघुवंशे १९।५०)

राजयक्ष्मणः क्षीणदशायाः कामोपभोगदशायाश्च न कोऽपि विशेषो महाकविदृष्ट्या।

भारतीयजीवनदर्शनस्य तद्गतविशिष्टकालबोधस्य भावनात् संस्कृतकविभिर्जीवनस्यैकपक्षीयं रूपं न प्रस्तुतम्, तस्य सर्वाङ्गीण एव विकासो निर्दिष्टः। अयमेव हेतुर्यदस्माकं महाकाव्येषु प्रायशः पुरातनकथा एव रामायणमहाभारतादिभ्यो गृहीताः कविभिः। केवलं समकालिकजीवनं क्षणिकवर्तमानमेव वा यानि काव्यानि विषयीकुर्वन्ति, तेषु जीवनस्य खण्डितमेव रूपमायाति।

संस्कृतमहाकवयो न कालस्य खण्डविशेषं केवलं विषयीकुर्वन्त्यपितु अतीतानागतवर्तमानेषु सततमनुस्यूतां तदीयामखण्डसत्तां विषयीकुर्वन्ति। इयं च भारतीया दृष्टिरतीतस्यापि वर्तमाने सजीवां सत्तामनुभावयति, तद्यथाहुर्महाभारतकाराः-

**यस्य बुद्धिः परिभवेत् तमतीतेन सान्त्वयेत्।**
**(आदिपर्वणि, १४६।७४)**

इत्थं च पुरातनं संस्कृतकाव्यपरम्परायां सदैव नवायते, अतीतस्य वर्तमाने साक्षात्क्रियमाणस्य पुनःसृष्टेः।

यस्य परमतत्त्वस्य सर्वव्यापित्वं सर्वात्मकत्वं च ऋषिभिः आनन्दरूपेण रसरूपेण वा साक्षात्कृतं मानवीयसम्बंधेषु प्रेमरूपेण तस्यैव समुल्लासः कविभिरवालोकि। प्रेम्णि अनन्यनिष्ठाया अद्वितीयं चित्रणं संस्कृतकाव्येषु प्रस्तुतम्। दाम्पत्यस्य सर्वातिशायिनी प्रतिष्ठाप्यत्रैव समुल्लसति, नार्या गौरवमपि तथैवात्र परिभावितम्। कालिदासः स्वकाव्येषु प्रेम विषयीकुर्वंस्तस्य परिष्कारं परव्याप्तिं च साधु प्रकटीकुरुते। मेघदूते-

**स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-**
**दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति।। (उ.मे. ५५)**

इति यक्षस्योक्तौ सारं प्रेम्णोऽनुभूतेर्महाकविना समुपस्थापितम्।

वैदिकपरम्परायां समुल्लसिता संस्कृतकाव्यधारा यथा नारीं गार्हस्थ्यं दाम्पत्यं च तीर्थजलाभिषेकैरिव पावयामास गौरवेण च मण्डयामास, न तथा निर्वेदपरायणा बौद्धजैनपरम्पराणां काव्यधारा। वेदेतिहासपुराणभावनापरायणाः सुकवयस्तु-

**नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम्। -म.भा. ३।५८।२८**
**यस्य वै तादृशी भार्या धन्यः स मनुजो भुवि।**
**भार्या हि परमो नाथः पुरुषस्येह विद्यते।।**
**नास्ति भार्यासमं किञ्चिन्नरस्यार्तस्य भेषजम्।**
**नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः।**
**नास्ति भार्यासमो लोके सहायो धर्मसाधनः।।**
**(तत्रैव १२।१४२।७-१०)**

भारतीयपरम्परा पुरुषार्थचतुष्टयावाप्तौ जीवनस्य परिपूर्णविकासं कामयते। पुरुषार्थेष्वपि त्रिवर्गसिद्धिः प्रथमः कल्पः, सोऽपि दाम्पत्यं गार्हस्थ्यं च ऋते न सिद्ध्यति, तस्यापि सिद्धिः सद्भार्याधीनेति सर्वत्र नः संस्कृतिः नारीमपेक्षमाणा तिष्ठति उच्चतरजीवनादर्शानामुपलब्ध्यै। अतो मार्कण्डेय आह-

भर्तव्या रक्षितव्या च भार्या हि पतिना सदा।
धर्मार्थकामसंसिद्ध्यै भार्या भर्तृसहायिनी।।
यदा भार्या च भर्ता च परस्परवशानुगौ।
तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम्।
कथं भार्यामृते धर्ममर्थं वा पुरुषः प्रभो।
प्राप्नोति काममथवा तस्यां त्रितयमाहितम्।।
तथैव भर्तारमृते भार्या धर्मादिसाधने।
न समर्था त्रिवर्गोऽयं दाम्पत्यं समुपाश्रितः।।
(मार्कण्डेयपुराणे २१।६८-७२ कलिकातासं. पृ. १३३)

कालिदासादिभिश्च त्रिवर्गसिद्ध्यै नार्या उपादेयतां वीक्ष्य शीलप्रकर्षदृष्ट्या स्त्रीपुंभिदा सर्वथा निरस्ता-

स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम्
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्।।
(कुमारसम्भवे ६।१२, १३)

गृहिणीपदं किमपि गौरवास्पदं वर्तते संस्कृतकवीनां कृते। तथैव तत्साहचर्यात् पारिवारिकसम्बन्धानां या माधुर्यसम्भृता रसमयी अभिव्यक्तिः संस्कृतकाव्येषु जाता सापि विश्वसाहित्येऽद्वितीयैव। गृहिणीं प्रति पत्युः प्रणतिपरायणतामपि श्लाघते भारतीयेयं परम्परा, तदुदाहरणानि तु कालिदासामरुकादिषु दृश्यन्ते भूयांसि।

पुरुषप्रधाने समाजे नार्या यदा यदा अवमानना भवति, तदा तदा महाकवयस्तस्या गौरवस्य शक्तेश्च स्मारयन्ति जनान्। आदिकविस्तु सीतां पृथिव्याः साम्राज्ञीभूतां द्रष्टुमाचकाङ्क्ष। वसिष्ठमुखेन स आह -

आत्मा हि दाराः सर्वेषां दारसङ्ग्रहवर्तिनाम्।
आत्मेयमिति रामस्य पालयिष्यति मेदिनीम्।। (अयोध्याकाण्डे ३७।२४)

कालिदासेन च अग्निवर्णगृहिण्या राज्याभिषेकं विधाय वाल्मीकेरेव स्वप्नः साकारतां प्रापितः राज्ञ्या राज्यपालनं तथैवाव्याहतादेशत्वं च तेन निरूपितम्-

राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा।। (रघुवंशे १९।५७)

संस्कृतकाव्यधारा भारतीयतायाः प्रातिनिध्यं विधत्ते, अत एव तत्र निहितां समन्वयभावनां सहिष्णुतामप्यसौ सम्यक् चरितार्थयति। यद्यपि शास्त्रार्थदृष्ट्या दर्शनप्रस्थानभेदबुद्ध्या वा वैदिका बौद्धा जैनाश्च परस्परेण कलहायन्ते, परन्तु संस्कृतकवयस्तु सर्वधर्मसमादरबुद्धिं

प्रकटीकुर्वन्ति साम्प्रदायिकवैमत्यं रसतरङ्गिण्यां निमज्जयन्ति। क्षेमेन्द्रशिवस्वामिप्रभृतयः सुकवयो बुद्धस्य चरितं विषयीकृत्य काव्यानि निबबन्धुः। महाकविर्जयदेवस्तु दशावतारेषु बुद्धं समावेशयन् भक्तिविनम्रस्तं स्तौति-

**निन्दसि यज्ञविधेरहहश्रुतिजातं**
**सदयहृदयदर्शितपशुघातम्**
**केशव धृतबुद्धशरीर!**

यद्यपि पन्थानो भिद्यन्ते परन्तु लक्ष्यं समेषां मानवानामेकमेवेति महाकविः कालिदासः सम्यगाह।[1] एतदेव दृढयति महाकविः पुष्पदन्तोऽपि-

**रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव।। (शिवमहिम्नः स्तोत्रे ७)**

## संस्कृतकाव्येषु समकालिकबोधः

संस्कृतमहाकाव्यानि प्रायशः पौराणिकं वस्तु विषयीकुर्वन्ति। ऐतिहासिकमहाकाव्यानामपि कापि परम्परा विलसति संस्कृतसाहित्ये। एतेषु ऐतिहासिकमहाकाव्येषु यद्यपि नायकः कवेः समकालिकः, परन्तु कविना तदीया दोषाश्छादिता गुणाश्च पर्वतीकृत्य विशदिताः। यथा नवसाहसाङ्कचरित-विक्रमाङ्कदेवचरितादिमहाकाव्येषु अलौकिकतत्त्वानां समावेशेन नायकानां दैवीकरणेन च पौराणिकमहाकाव्यवदेव विषयवस्तु प्रस्तुतं भवति। एवं हि सति संस्कृतकाव्येषु समकालिकबोधो यथार्थचित्रणं वा न विद्यत इत्याक्षिपन्ति नव्याः।

संस्कृतमुक्तकेषु समकालिकजीवनस्य अनेकत्र यथार्थचित्रणं विहितमिति सुभाषितसङ्ग्रह-विषयकेऽध्याये इह विस्तरशो निरूपितमेव। तत्र नैकैः कविभिर्ग्रामजीवनस्य निम्नवर्गजनानां दारिद्र्यस्य अभावानां सङ्घर्षस्य चातीव सूक्ष्मेक्षिकया अत्यन्तं मर्मभेदि यथायथमुद्घाटनमकारि। एवमेव-अन्योक्तिष्वपि परोक्षतया कविः स्ववर्तमानं कटाक्षीकुरुते। महाकाव्येष्वश्यमुदात्तमतीतगतं लौकिकयथार्थातिक्रमणरम्यं किमपि वस्तु उपस्थाप्यते परन्तु तत्रापि समकालिकजीवनगतो यथार्थः अवशं सङ्क्रामति, क्वचिच्च जानता कविना सचेतनभावेन अतीतवातायनाद् वर्तमानकाल एवावलोक्यते, पौराणिककथाद्वारेण स्वजीवनस्य स्वकालस्य स्वसमाजस्यैव वा व्याख्या विधीयते। महाकवीनामलोकसामान्यप्रतिभाजुषां तु अयमेव पन्थाः। तद्यथा-कालिदासो रघुवंश इन्दुमतीस्वयंवरव्याजेन भारतभुवः शासकानां नाना राज्ञां चरितमुद्घाटयामास, रघोर्दिग्विजयप्रसङ्गेन वङ्क्षुतटे हूणानां परजयमङ्कयामास, क्वचिच्च नगर-राज्यस्थित्यादिवर्णने स्वानुभूतं जीवनमपि आदर्शस्थितौ पुराणवस्तुनि वा संयोजयामास। यथा अयोध्यायां राजमार्गेऽर्धरात्रे सुप्तानां वाणिनीनामिदं चित्रम्-

१. बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे।। (रघुवंशे १०।२६)

यस्मिन् महीं शासति वाणिनीनां
निद्रां विहारार्धपथे गतानाम्।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम्।। (रघु. ६।७५)

अत्र स्वानुभूतस्य प्रत्यक्षदृष्टस्य वा स्मृतिरूपस्थापिता, आदर्शयथार्थयोः सम्मिश्रणं च विहितम्। एवमेव कविरयं रघुवंशे हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्' विधत्ते (१।४५), पारसीकानां पाश्चात्त्येनाश्वसैन्येन युद्धं रघोः कारयति (४।६२), केरलेषु नारिकेलासवं पानं शंसते (४।४२) । एतादृशवर्णनेषु साङ्कर्यं भवति कविप्रत्यक्षदृष्टवस्तुजातस्य परम्परया ज्ञातस्यातीतस्य च। अग्निवर्णस्य कामलोलुपताया अतिरञ्जितचित्रणं तु स्वसमकालिक-सामन्तसमाजस्य क्षयिष्णु चरित्रं साहसिकतयोद्घाटयति।

क्वचिन्महाकवयः पुरातने प्रागैतिहासिकेऽपि कथानक ऐतिहासिकमित्तिवृत्तं सूचयन्तस्तद्द्वारेण पुराणस्येतिहासदृशा इतिहासस्य च पुराणदृशा व्याख्यां कुर्वन्तः प्रतीयन्ते। तथाहि- भारविकृतकिरातार्जुनीये द्रौपदी युधिष्ठिरमाक्षिपति-

गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजां नराधिपः।
परैस्त्वदन्यः क इवापहारयेन्
मनोरमामात्मवधूमिव श्रियम्।। (१।३१)

गुप्तकालस्यावसानवेलायां तदनन्तरं वा समुद्भूतो भारविरिह शकराजभिया भार्यां ध्रुवस्वामिनीं दित्सन्तं रामगुप्तं कटाक्षयति इति सुकरमनुमातुम्।

विष्णुवर्धनयशोवर्मा दशपुरं षष्ठशतके शशास। आ ५८२ वैक्रमाब्दादा ५२२ वैक्रमाब्दाद् वर्तते तस्य शासनकालः। दशपुरविजयस्तम्भशिलालेखे यादृशं चित्रितं वर्तते तदीयं चरित्रं शौर्यमवदानं वा तत् अन्धकारमये तस्मिन् काले दीप्यमानं ज्योतिरिव प्रतिभाति, अवसादवेलायामाशामिव सञ्चारयति, पराजितराष्ट्राय विजयप्रत्ययं प्रददाति। भारविः किरातार्जुनीयस्योपक्रम एवावसादं पराजयानुभवं साकारयन्नर्जुनस्य चरित्रेण तत्र आशाया ज्योतिरिव दीपयति। भारविर्यशोवर्मणः समकालिकः अर्जुनस्य यशोवर्मणश्च साम्यं सूचयति इति प्रतीयते।

माघस्य शिशुपालवधे तु समकालिकजीवनच्छविः सुस्पष्टं सजीवं स्फुरन्ती अनुभूतिमायाति। माघो मरुभुवि श्रीमालपुर उवास। राजस्थानगतं तदानीन्तनं जनजीवनं विशदं निरूपितं माघेन श्रीकृष्णस्य यात्राप्रसङ्गे। क्वचिदयं शालिक्षेत्ररक्षणे गोपिकायाः सम्भ्रमं (१२।४२), करभभीतेरुल्ललतो रासभान्निपतितामवरोधवधूं (५।७), अविशदवर्णां निद्रया शून्यशून्यां गिरं ददन्तं प्रहरिणं (११।४), दधिमथनरतान् कपिशं पिपासतो वा गोपान् (११।८, ३८) तथा

निरूपयति यथा सामान्यजनजीवनं प्रत्यस्याभिनिवेशोऽनुरागः स्वसमकालिकसमाजस्य च प्रत्यक्षानुभवोऽस्य प्रकटीभवति। एवमेव नैषधकारेणापि कुण्डिनपुरनगरायणं नलवरयात्राभोजनं वा वर्णयता स्वानुभूतजीवनं स्मृत्या तत्र सङ्क्रामितम्।

कालिदासीयकाव्येषु लोकजीवनं लोकवार्ता च कथं विशदं पदं गमिते इति कालिदास-विषयकेऽध्याये विशदमेवास्मिन् प्रबन्धे विवेचितम्।

वस्तुतो भारतीयधर्मदर्शनसंस्कृतिविषयकपरिपूर्णबोधमलं वितरति संस्कृतकाव्यसाहित्यम्। तथैव भारतीयजनजीवनं यथार्थं समग्रामपि भारतीयपरम्परां परिचेतुमलं भवतीदं साहित्यम्।

एतादृशविविधविधाविशिष्टस्य नानाविषयसंवलितस्य सार्धद्विसहस्राब्दकालावधौ विरचितस्य संस्कृतकाव्यसाहित्यस्य नवीनशोधसमन्वितं विवेचनं तैस्तैर्विशेषज्ञपण्डितैरिह पञ्चदशाध्यायेषु विहितं विदुषां साहित्यानुसन्धित्सूनां च तोषायालं स्यादिति विश्वसिति-

राधावल्लभः।

# भूमिका

'संस्कृत वाङ्मय का बृहद् इतिहास' के प्रस्तुत खण्ड में १८०० ई. तक श्रव्यकाव्य की विभिन्न विधाओं में हुई रचनाओं का परिचय दिया गया है। लगभग ढाई हजार वर्षों की भारतीय काव्य-साधना का यह अनुशीलन संस्कृत कविता के अद्वितीय वैभव और वैपुल्य का परिचायक है। इस कविता का मूल स्रोत वैदिक काव्य है- इस तथ्य पर यहाँ प्रथम अध्याय में विशद विचार किया गया है। यद्यपि परम्परा वेद को अपौरुषेय तथा लौकिक काव्य से भिन्न मानती है, किन्तु जिस प्रकार हमारे धर्म और दर्शन के विभिन्न प्रस्थानों के बीज वेद में हैं, उसी प्रकार हमारी काव्यपरम्परा का उद्गम भी उसी से माना जाना उचित है। राजशेखर तो अलङ्कारशास्त्र को वेद का भी उपकारक बताकर उसे सप्तम वेदाङ्ग के रूप में प्रतिष्ठित करते हैं।[1] यही नहीं, वे ऋग्वेद के मन्त्रों के उद्धरण देकर उनकी अलङ्कारशास्त्र के आधार पर व्याख्या की प्रामाणिकता और उपादेयता को भी स्थापित करते हैं।[2]

संस्कृतकाव्यधारा की पृष्ठभूमि में वेद का यह सुदृढ़ आधार सदैव रहा है। इस आधार को दृष्टि में रखकर ही राजशेखर ने साहित्य को 'पञ्चमी विद्या' तथा 'चारों विद्याओं का भी निष्यन्द' कहा है।[3]

काव्य इस साहित्यविद्या का सर्वाधिक रमणीय अंग है, जो दृश्यकाव्य तथा श्रव्यकाव्य की दो विधाओं में विकसित होता रहा है। प्रस्तुत ग्रन्थ में संस्कृत श्रव्यकाव्य की विधाओं-महाकाव्य, खण्डकाव्य, रागकाव्य तथा मुक्तक का विभिन्न प्रस्थानों और परम्पराओं के परिप्रेक्ष्य में सर्वांगीण ऐतिहासिक अनुशीलन प्रस्तुत है। इस अनुशीलन में अनेक अज्ञात या अल्पज्ञात किन्तु महत्त्वपूर्ण कवियों[4], असमीक्षित पाण्डुलिपियों[5] तथा नवीन अनुसन्धान से प्रकाश में आये कतिपय प्राचीन काव्यों और काव्यप्रवृत्तियों पर भी विचार किया गया है। इस अनुशीलन से स्पष्ट है कि संस्कृत कविता में ढाई हजार वर्षों की विकासयात्रा में प्रयोगशीलता और नवोन्मेष के लिये अवकाश सदैव बना रहा, उसकी परम्परा अनवरत

---

१.२. 'उपकारकत्वादलङ्कारः सप्तममङ्गम्' इति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद् वेदार्थानवगतिः। यथा-

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति।।
सेयं शास्त्रोक्तिः। (काव्यमीमांसा, पटनासं., पृ. ७)

३. 'सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्।'- इति यायावरीयः। ...'पञ्चमी साहित्यविद्या' इति यायावरीयः। 'सा हि चतसृणामपि विद्यानां निष्यन्दः।'- वही, पृ. ९-१०।

४. विशेष रूप से "सुभाषितसङ्ग्रह तथा सुभाषितों के कवि" शीर्षक अध्याय में।

५. महाकाव्य, रागकाव्य, ऐतिहासिक काव्य तथा सन्धान काव्य विषयक अध्यायों में कतिपय अप्रकाशित काव्य समीक्षित हैं।

गतिशील बनी रही। संस्कृत काव्य के कालिदासोत्तरकाल को ह्रास का युग कहना भारवि, माघ, रत्नाकर, शिवस्वामी, योगेश्वर, अभिनन्द, नीलकण्ठ दीक्षित, पण्डितराज आदि सुकवियों की काव्यात्मक उपलब्धि को अनदेखा करना है। इसी प्रकार संस्कृत काव्यों में जन-जीवन तथा यथार्थ के चित्रण की कमी का आरोप भी केशट, योगेश्वर आदि कवियों के अनुशीलन से निराधार सिद्ध होता है।

## संस्कृत काव्य का मूलाधार : वाचिक परम्परा

यह सुविदित तथ्य है कि वैदिक ऋचाएँ कुछ सहस्र वर्ष तक केवल वाचिक परम्परा में ही यथावत् सुरक्षित रखी जाती रहीं। इन्हें सुन-सुन कर स्मरण किया जाता था, अतः वे 'श्रुति' कहलाईं। लौकिक संस्कृत काव्य भी आरम्भ की कुछ शताब्दियों में तो केवल वाचिक रूप में ही फलता-फूलता रहा। रामायण, महाभारत और पौराणिक आख्यानों को सूत लोग कथाकथन या कथागायन की शैली में समाज के सम्मुख प्रस्तुत करते थे। रामायण का गायन वाल्मीकि से सुन-सुन कर और स्मरण करके कुश और लव ने किया था, कुशीलवों ने इस परम्परा को जारी रखा।

शताब्दियों तक वाचिक परम्परा में फलते-फूलते रहने के कारण संस्कृत काव्य में एक विशिष्ट शैली का विकास हुआ। निश्चय ही एकान्त में बैठकर रचे जाने वाले काव्य का शिल्प, संघटना और मुहावरा सुना-सुना कर पल्लवित किये जाने वाले काव्य से भिन्न होगा।

स्मरण-श्रृंखला से काव्य की विभिन्न विधाओं का प्राचीन काल में विकास किया गया। आख्यान, उपाख्यान, गाथा, नाराशंसी आदि ये सभी विधाएँ पद्यबद्ध होती थीं। अथर्ववेद के उल्लेख से स्पष्ट है कि वाचिक परम्परा में प्रचलित लौकिक काव्य की ये विधाएँ वैदिक संहिताओं के समान ही प्राचीन हैं।[1]

रामायण और महाभारत के उल्लेखों से प्रतीत होता है कि 'गाथा'- काव्य उस काल में बड़ा लोकप्रिय था। 'गाथा' का उल्लेख इन दोनों इतिहास काव्यों में प्रायः 'गै' (गाना) धातु के साथ किया गया है, अतएव गाथाएँ गायी जाती रहती थीं- यह स्पष्ट है।[2] गाथा कलेवर की दृष्टि से मुक्तक की भाँति छोटी होती थी और लोकजीवन से सम्पृक्त होती थी। इसलिये लोकगीतों की भाँति स्त्रियाँ, बच्चे, बूढे या छात्र भी प्रायः मनोविनोद या उपदेश के लिये गाथाएँ गाते रहते थे।[3] कई गाथाओं के साथ तो उनके रचयिता या गायक का नाम भी लिया जाता था।

---

१. स बृहतीं दिशमनुव्यचलत्। तमितिहासः पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन्। इतिहासस्य च वै पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद-अथर्ववेद १५।६।११

२. अप्यत्र गाथां गायन्ति ये पुराणविदो जनाः। - महाभारत, आदिपर्व, ११२।१२

३. स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः।
या गाथाः सम्प्रगायन्ति कुर्वन्तोऽध्ययनं तथा।। - वही, कर्णपर्व, २७।७१

४. अत्र पिङ्गलया गीता गाथाः श्रूयन्ति पार्थिव। (वही, शान्ति., १६८।४६)
अत्राप्युदाहरन्तीमा गाथाः सत्यवता कृताः। (वही १४८। १४)

जीवन के नाना प्रसंगों में देवों, ऋषियों या गुरुजनों के द्वारा पूर्व में कही गयी या गायी गयी गाथाएँ लोग अवसरोचित कर्त्तव्य का निर्णय करने के लिये उद्धृत करते रहते थे।[1]

आकार में लघु होते हुए भी 'गाथा' जीवन के व्यापक अनुभव को समाहित कर लेती थी, अतः 'गाथा' के लिये उसके माहात्म्य वर्धनार्थ अनेकत्र 'इतिहास' शब्द का भी प्रयोग महाभारत में मिलता है।[2] किसी प्राचीन सूक्ति या बुद्धिमान् व्यक्ति के द्वारा रची गयी गाथा के लिये 'इतिहास' की संज्ञा दी गयी है।

गाथाओं के अतिरिक्त वाचिक परम्परा के लोकप्रिय काव्य की अन्य विधाएँ थीं- आख्यान, उपाख्यान, पुराण तथा कथा। आख्यान, उपाख्यान आदि को गा-गा कर या गद्य के रूप में प्रस्तुत करने वाले कवि 'सूत' थे। पुराणों को सुनाने वाले 'पौराणिक' कहे जाते थे, और कथा को प्रस्तुत करने वाले 'कथक'।[3] कभी-कभी तो 'सूत' की उपाधि या जाति वाला एक ही व्यक्ति विभिन्न शिल्पकलाओं, वास्तुशास्त्र तथा पौराणिक आख्यानों में भी विशारद होता था।[4]

इस प्रकार वेद के काल से ही अस्तित्व में आ चुकी इन काव्यविधाओं का तद्वत् वाचिक परम्परा में विकास होता रहा और इस विकास-परम्परा में इनमें चार प्रकार की शैलियों को अपनाया गया - (१) रूढ विशेषणविशेष्यात्मक, (२) सम्बोधनात्मक (३) उपमानोपमेयात्मक (४) प्रसंगविशेषवर्णनात्मक।[5]

वैदिक मन्त्ररचना के समानान्तर स्मार्तकाव्य का भी गुरु-शिष्य या वक्ता-श्रोता की श्रृंखलाओं के द्वारा नैरन्तर्य बना रहा। डॉ. राजेन्द्र प्रसाद हाजरा के मत से यह स्मार्त (लौकिक) काव्य-परम्परा यजुर्वेदमूलक या यज्ञमूलक थी। इसका सम्बन्ध अश्वमेध यज्ञ में गाये जाने वाले 'पारिप्लव' आख्यानों से रहा है।

---

१. अत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः। - (वही, आरण्यक, १३५।३)

२. अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
शम्पाकेन विमुक्तेन गीतं शान्तिगतेन ह।। (वही, शान्ति., १७०।२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर।। (वही, १७०।)
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
गीतं विदेहराजेन जनकेन प्रशाम्यता।। (वही, १७१। )
अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा।। (वही, आरण्यक, ३१।२०)

३. सूताः पौराणिकाश्च ये। कथकाश्चापरे.. (वही, आदि. २०६।२-३)

४. द्र.- वही, आदि. १।

५. द्र. वाचिक परम्परा; भारतीय साहित्य का मूल, मध्यभारती अंक ३४, में प्रकाशित डॉ. रामकरण शर्मा का लेख, पृ. २

६. 'पुराणम्' पत्रिका का डॉ. राजेन्द्रप्रसाद हाजरा कमेमोरेशन वाल्यूम (Commemoration Volume) पृ. २०-२४)

इस काव्य-परम्परा में कथागायक या कवि को मूल कथावस्तु, उसका घटनाविन्यास, संवाद आदि तो यथावत् स्मरण रखने ही पड़ते थे, आवश्यकतानुसार ऊपर उल्लिखित वाचिक परम्परा के काव्य की विशिष्ट शैली में पदावलियों या वाक्यावलियों का तत्काल संयोजन भी वह करता चलता था। ऐसी पदावलियों या वाक्यावलियों का एक मानक संचय भी अवसरोचित प्रयोग के लिये उसके पास रहता था।[1] महाभारत में 'अत्राप्युहरन्तीममितिहासं पुरातनम्' 'गाथा अप्यत्र गायन्ति...' इत्यादि पदावलियों की सहस्रों बार आवृत्ति इसी कारण से हुई है।

## वाचिक परम्परा के कवि

यद्यपि इस वाचिक काव्यपरम्परा को अज्ञात सूतों, पौराणिकों और कुशीलवों ने विकसित किया, परन्तु अनेक कवि ऐसे भी हैं, जिनके नाम वाचिक-काव्यपरम्परा में महान् रचनाकार के रूप में जाने जाते रहे। वाल्मीकि और व्यास का कर्तृत्व तो शताब्दियों तक वाचिक काव्य-परम्परा में समादृत रहा। महाभारत के साक्ष्य से विदित होता है कि वाल्मीकि के स्फुट श्लोक ऊपर विवेचित गाथा-काव्यों की भाँति विविध अवसरों पर उदाहृत होते थे।[2] महाभारत में शम्याक, मङ्कि, विदेह जनक आदि के भी श्लोक इसी रूप में उद्धृत हैं। पर वाचिक काव्य की इस लोक-परम्परा के मूर्धन्य कवि उशनस् या शुक्राचार्य हैं, जिनके कहे हुए पद्य महाभारत में नाम के साथ[3] सर्वाधिक उद्धृत हैं। उशनस् कवि ने जीवनानुभवों के निचोड़ को सहज भाषा में सटीक अभिव्यक्ति देने के कारण प्रसिद्धि प्राप्त की होगी, जो उनके नाम से उद्धृत इन कुछ श्लोकों के उदाहरण से स्पष्ट है -

पुनरावर्तमानानां भग्नानां जीवितैषिणाम्।
भेतव्यमरिशेषाणामेकायनगता हि ते।। - शल्यपर्व. ५७।१२, १३

ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा।
ते श्रद्दधाना वध्यन्ते मधु शुष्कतृणैर्यथा।। - शान्ति. ३७।६७

---

१. मध्यभारती, अंक ३४, पृ. ४-६

२. अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि।
पीडाकरममित्राणां यत् स्यात् कर्तव्यमेव तत्।। म.भा. ७।११८।४८

३. अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु।। - शल्य. ५७।६७
उशना चात्र गाथे द्वे प्रह्लादायाब्रवीत् पुरा। - शान्ति. ३७।६७
श्लोकश्चोशनसा गीतो पुरा तात महर्षिणा। -राजधर्म ५७।२, ३
भगवानुशना चाह श्लोकमत्र विशाम्पते। -वही

उशनस् की कवि के रूप में सर्वातिशायी प्रतिष्ठा इस तथ्य से भी विदित होती है कि भगवान् श्रीकृष्ण ने श्रीमद्भगवद्गीता के विभूतियोग में अपने आप को "कवीनामुशना कविः" बताया है। उशनस् की महती काव्यप्रतिभा के कारण उनका नाम ही कवि का पर्याय हो गया।[1] यही नहीं 'काव्य' भी उशनस् की ही एक संज्ञा मानी जाने लगी।[2]

महाभारत के उल्लेख से ही यह भी विदित होता है कि उशनस् कवि ने एक सहस्र अध्यायों में एक प्रबन्ध भी 'कहा' था।[3] सम्भव है, उनके नाम से उद्धृत पद्य या गाथाएँ महाभारत के कवियों ने इसी प्रबन्ध से ली हों।

लिपि का आविष्कार हो चुकने तथा भोजपत्रों या ताडपत्रों पर लिखकर काव्य ग्रन्थों को ग्रन्थागारों में सुरक्षित रखने की व्यवस्था हो जाने पर भी संस्कृत कविता का वाचिक स्वरूप प्रायः बना रहा, अन्तर केवल इतना ही आया कि ग्रन्थ सामने रख कर जब काव्यपाठ श्रोताओं के सम्मुख किया जाता था, तो उसमें पल्लवन, परिवर्धन तथा पाठान्तर के लिये वैसा अवकाश नहीं रहता था, जैसा सूत-कवियों के द्वारा की जाने वाली विशुद्ध कण्ठस्थ और मौखिक प्रस्तुतियों में रहता था। फिर भी आस्वाद की दृष्टि से कविता आज की भाँति एकान्त में पढ़ी जाने वाली विधा प्राचीन परम्परा में कभी नहीं रही, वह सुनी जाने वाली विधा ही थी। कवियों को काव्य प्रस्तुत करने के लिये मंच या तो राजसभा की अभिरूपभूयिष्ठा परिषद् के सम्मुख मिलता था, या अपनी चुनिन्दा मित्रमण्डली में या कामसूत्र में वर्णित सरस्वतीभवन के आयोजनों में।[4] कवि की दृष्टि से कविता रसिक श्रोताओं के आगे पाठ के लिये थी, भावक की दृष्टि से कविमुख से सुनकर आस्वाद लेने के लिये थी। स्वभावतः इस स्थिति का प्रभाव संस्कृत काव्य की अपनी संघटना और रचनाशिल्प पर पड़ा। सानुप्रास पदावली या नादसौन्दर्य पर कवियों का ध्यान रचनाप्रक्रिया में अनायास ही रहता था।

कविता के विषय में मुद्रण की आधुनिक तकनीक के विकास के पूर्व तक यह धारणा थी कि वह रसिक समाज के समक्ष पाठ करने के लिये है, अतएव उसमें सुपाठ्यता होना आवश्यक था। कवि के लिये पाठ में प्रवीण होना अपेक्षित था। राजशेखर ने तो यहाँ तक कहा है कि कविता किसी तरह संस्कार या अभ्यास से सध ही जाती है, पर सरस्वती तो जिसको सिद्ध है वही काव्य-पाठ करना जानता है। पाठ में सौन्दर्य तो कई जन्मों के अभ्यास से आता है -

---

१.२. शुक्रो देवगुरुः काव्य उशना भार्गवः कविः। - **अमरकोश**, १।३।२५
काव्यं ग्रन्थे पुमान् शुक्रे.. । **मेदिनी**. ११३।११
कविर्वाल्मीकिशुक्रयोः।-**वही**, १५७।४

३. अध्यायानां सहस्रेण काव्यः सङ्क्षेपमब्रवीत्। -**राजधर्म**. ५९।९१

४. पक्षस्य मासस्य वा प्रज्ञातेऽहनि सरस्वत्या भवने नियुक्तानां नित्यं समाजः। -१।४।१५

करोति काव्यं प्रायेण संस्कृतात्मा यथा तथा।
पठितुं वेत्ति स परं यस्य सिद्धा सरस्वती।।
यथा जन्मान्तराभ्यासात् कण्ठे कस्यापि रक्तता।
तथैव पाठसौन्दर्यं नैकजन्मविनिर्मितम्।।
(काव्यमीमांसा अ. ७, बड़ौदा सं. पृ. ३३)

वाचिक काव्य की परम्परा ने भारतीय साहित्य को दो उपजीव्य और महान् कालजयी रचनाएँ दीं-रामायण और महाभारत। कविता के लिखे और पढ़े जाने का प्रचलन हो जाने पर भी संस्कृत साहित्य में इन दो इतिहासकाव्यों की प्रेरणा और प्रभाव अनवरत बने रहे। इस अर्थ में काव्य की वाचिक परम्परा के शिल्प और विषयवस्तु ने संस्कृत की अलङ्कृत काव्य-धारा को परोक्ष या प्रत्यक्ष रूप से प्रभावित किया है। डॉ. रामकरण शर्मा ने इस प्रभाव की प्रत्यक्ष अन्विति कालिदास में दिखाते हुए उन्हें 'सान्ध्य-कवि' की संज्ञा दी है, कालिदास वाचिक काव्य के परम प्रकर्ष और अलङ्कृत शैली के काव्य के उदय-इन दोनों के सन्धिकाल में स्थित हैं, एक से उन्होंने रिक्थ लिया और दूसरे के लिये मार्ग बनाया है।

## प्राचीन कवियों की कोटियाँ

उपर्युक्त पृष्ठभूमि में संस्कृत काव्यपरम्परा में कवियों की बहुविध कोटियाँ सामने आतीं हैं। बौद्ध ग्रन्थ 'अङ्गुत्तरनिकाय' २।२३० में काव्यरचना-प्रक्रिया की दृष्टि से कवियों की चार श्रेणियाँ बतायी गयी हैं-सूत कवि, प्रतिभान कवि, अर्थ कवि तथा चिन्ता कवि। सूत कवि तो प्राचीन आख्यान आदि को जनता के सामने प्रस्तुत करता है। प्रतिभान कवि यथादृष्ट वर्णन करता है। अर्थ कवि पुरुषार्थ का उपदेश काव्य के द्वारा देता है। चिन्ता कवि समाधि की दशा में अवस्थित होकर उत्कृष्ट काव्य की रचना करता है।

शास्त्रीय वाङ्मय के व्यवस्थापन तथा चिन्तनपरम्परा के विकास ने आगे चलकर कवि के लिये प्रतिभा के साथ-साथ व्युत्पत्ति का अधिग्रहण अनिवार्य बना दिया। भामह ने जहाँ प्रतिभा को ही काव्यरचना का हेतु माना था,[1] दण्डी ने प्रतिभा के साथ-साथ व्युत्पत्ति को भी उसमें हेतु माना[2] और कहीं-कहीं तो बिना पूर्वजन्मार्जित संस्काररूप प्रतिभा के भी व्युत्पत्ति तथा अभ्यास के द्वारा काव्य-रचना की सम्भाव्यता उन्होंने मानी।[3] इस दृष्टि से प्रतिभाकवि और अभ्यासकवि - ये दो कवियों की श्रेणियाँ उस काल में बन गयी होंगीं। कालान्तर में व्युत्पत्ति की अनिवार्यता उत्तरोत्तर बढ़ती गयी। तब राजशेखर ने तो कवि का लक्षण ही यह किया- 'प्रतिभा-व्युत्पत्तिमांश्च कविः कविरित्युच्यते।'[4]

---

१. काव्यं तु जायते जातु कस्यचित् प्रतिभावतः। -भामह : **काव्यालङ्कार** १।५
२. नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः।। दण्डी : **काव्यादर्श** १।१०३
३. न विद्यते यद्यपि पूर्ववासना गुणानुबन्धि प्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्। -**वही,** १।१०४)
४. **काव्यमीमांसा**, पटना, वि.सं. २०११, पृ. ४०

कविता का सम्बन्ध ऐसी सांस्कृतिक स्थिति में शास्त्र के साथ और घनिष्ठ होता चला गया जहाँ कवि को विदग्ध पण्डितों या राजसभा के जानकार गुणग्राही जनों के सम्मुख काव्य प्रस्तुत करना होता था। इस दृष्टि से काव्य और शास्त्र के सम्बन्ध को लेकर राजशेखर ने तीन कविकोटियाँ बतायीं हैं-शास्त्रकवि, काव्यकवि और उभयकवि। शास्त्रकवि भी तीन प्रकार का है,-शास्त्र रचना करने वाला, शास्त्र में काव्य या कवित्व का आधान करने वाला तथा काव्य में शास्त्र का सन्धान करने वाला।[1] वस्तुतः संस्कृतकाव्यपरम्परा के इतिहास की दृष्टि से इनमें तीसरी कोटि का ही विशेष महत्त्व है। माघ, श्रीहर्ष आदि के काव्यों में जहाँ शास्त्रीय विषय प्रसंगवश समाविष्ट हुए, वहाँ भट्टिकाव्य जैसे शास्त्र-विशेष को व्यवस्थित रूप से प्रस्तुत करने वाले काव्यों की भी समृद्ध परम्परा हमारे यहाँ विकसित हुई।[2]

राजशेखर ने काव्यकवि के रचना (सङ्घटना), शब्द, अर्थ, अलङ्कार आदि कोटियों की एकैकशः प्रधानता के आधार पर आठ भेद किये हैं तथा इनमें सभी कोटियों के समुचित विन्यास की क्षमता वाले कवि को "महाकवि" कहा है।[3]

## संस्कृत काव्यशास्त्र तथा काव्यरचना का अन्तःसम्बन्ध

संस्कृत काव्यशास्त्र के आचार्य यह स्वीकार करते आये हैं कि लक्ष्य ग्रन्थों के आधार पर ही उन्होंने अपने लक्षणों या सिद्धान्तों का निर्माण किया है। आचार्य आनन्दवर्धन कहते हैं कि उनके प्रस्थान की मान्यताएँ सहृदयजन रामायण, महाभारत जैसे लक्ष्य ग्रन्थों में देखते आ रहे थे।[4] वे यह भी कहते हैं कि उनकी सारी स्थापनाएँ वाल्मीकि, व्यास आदि पहले के प्रख्यात श्रेष्ठ कवियों के काव्यों के अनुसार ही प्रस्तुत की गयी हैं।[5]

आचार्यों की इस दृष्टि के कारण संस्कृत साहित्य में लक्ष्य और लक्षण के परस्पर अनुग्राह्यानुग्राहकभाव की श्रृंखला दोनों ओर से जुड़ी रही। प्राचीन श्रेष्ठ महाकवियों के काव्य का परिशीलन करके आचार्यों ने काव्य के सिद्धान्त, कोटियाँ और निकष निर्धारित किये तथा उनका अनुसरण कर बाद के कवियों ने काव्यपरम्परा का सातत्य बनाये रखा या कभी-कभी लक्षणों का अतिक्रमण कर आचार्यों को उनके पुनर्निर्धारण या पल्लवन के लिये प्रेरित भी किया। महाकाव्य की एक संज्ञा 'सर्गबन्ध' तथा सर्गों में उसके विभाजन की धारणा आचार्यों ने वाल्मीकि रामायण से ली होगी। पाणिनि या वररुचि के महाकाव्यों से[6] महाकाव्य के लक्षणों में एक महान् उच्चकुलसम्भूत नायक की अवधारणा आचार्यों ने ग्रहण

---

१. वही, पृ. ४०-४१
२. द्र.- प्रस्तुत ग्रन्थ में "शास्त्रकाव्य तथा सन्धानकाव्य" शीर्षक अध्याय।
३. काव्यमीमांसा, पृ. ४७
४. रामायण-महाभारत-प्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धिव्यवहारं लक्षयतां सहृदयानाम्.......... (ध्वन्यालोक, १।१ की वृत्ति)
५. वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः।। - वही,
६. इस ग्रन्थ का प्रथम अध्याय द्रष्टव्य।

की होगी, पर कालिदास के 'रघुवंश' महाकाव्य ने उन्हें इस धारणा को बदलने के लिये प्रेरित किया तथा आगे चल कर साहित्यदर्पणकार विश्वनाथ ने महाकाव्य में एक नायक के स्थान पर 'एकवंशभवा भूपा कुलजा बहवोऽपि वा' (६।३०२) का विकल्प प्रस्तुत किया।

'सर्गबन्ध' की ही भाँति 'महाकाव्य' की संज्ञा भी रामायण और महाभारत से प्रेरित होकर आयी हुई प्रतीत होती है। रामायण में ही इस काव्य के लिये 'महत्' शब्द का विशेषण के रूप में प्रयोग है -

कर्ता काव्यस्य महतः क्व चासौ मुनिपुङ्गवः। -बाल. ९४।२३

जबकि महाभारत में तो 'महत्' शब्द के प्रयोग का कारण काव्य की गुणवत्ता या गौरव बताया गया है-

'महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते।'

इसी प्रकार कालिदास के ऋतुसंहार और मेघदूत जैसे काव्यों ने भी आचार्यों को नयी काव्यविधाओं के नामकरण और लक्षण-निर्धारण की स्फूर्ति दी। 'मेघदूत' को कतिपय आचार्यों ने 'सङ्घात'-काव्य की संज्ञा दी। वस्तुतः भामह से लेकर काव्यशास्त्र के आचार्यों की परम्परा मेघदूत, अमरुककाव्य जैसे काव्यों के द्वारा अपने ही बनाये लक्षणों को निकष पर कसती रही है।

अलङ्कार, गुण, रीति, वक्रोक्ति आदि काव्यकोटियों या उनके भेदोपभेदों का पल्लवन भी आचार्यों ने अपने समय की या अपने से पूर्ववर्ती काव्यपरम्परा के परिशीलन से किया। भरतमुनि ने अपने नाट्यशास्त्र के सोलहवें अध्याय में काव्य के चार ही अलंकार बताये थे,-उपमा, दीपक, यमक तथा रूपक। दण्डी (३७), भामह (४३), उद्भट (४८), आनन्दवर्धन (५०), रुद्रट (८३), भोज (१११), मम्मट (११४), रुय्यक (१२०), शोभाकर मित्र (१५७), जयदेव (१७८), विश्वनाथ (१८०) तथा अप्पय दीक्षित (२०१) आदि आचार्य नये अलङ्कारों की परिकल्पना या लक्षण संस्कृतकाव्य की निरन्तर विकसित होती परम्परा से प्रमाण और प्रेरणा लेकर ही करते रहे।[1]

महाकवियों ने अपनी प्रतिभा से पदार्थों का अलौकिक या विशिष्ट स्वरूप उन्मीलित किया, तो आचार्यों ने उसे 'कविसमय' के रूप में मान्यता दी। राजशेखर कविसमय की पीठिका स्पष्ट करते हुए 'कविबद्ध' को ही प्रमाण बताते हैं-

देशेषु पदार्थानां व्यत्यासो दृश्यते स्वरूपस्य।
तत्र तथा बध्नीयात् कविबद्धमिह प्रमाणं नः।। (काव्यमीमांसा, अ. १८)

---

१. कोष्ठक में तत् तद् आचार्य द्वारा विवेचित अलङ्कारों की संख्या दी गयी है। विवरण के लिये द्र.-भारतीय काव्यसमीक्षा में अलंकारसिद्धान्त : डॉ. रेवाप्रसाद द्विवेदी, पृ. ४३-५७

इसी प्रकार विभिन्न महाकवियों की रचनाओं के आस्वाद में तुलनात्मक वैशिष्ट्य देख कर वामन आदि आचार्यों ने काव्यपाक का स्वरूप निरूपित किया (काव्यालङ्कारसूत्र १।३।१५), जिसका परवर्ती महाकवियों के काव्य का परीक्षण कर राजशेखर आदि ने पल्लवन किया। ध्वनिवाद को तो अपनी मान्यताओं के स्थापित करने के लिये सुदृढ़ आधार कालिदास, अमरुक आदि के काव्यों में मिला- यह इस ग्रन्थ में यथावसर विवेचित किया गया है।

## प्राकृत तथा अपभ्रंश काव्यों से अन्तःसंवाद

संस्कृत काव्य की एक महती विशेषता यह भी है कि उसने न केवल इतर भारतीय भाषाओं की काव्यपरम्परा को अनुप्राणित और प्रवर्तित किया, उनसे सतत संवाद भी बनाये रखा। इस संवाद का एक उत्कृष्ट निदर्शन हाल द्वारा संकलित 'गाहासतसई' है। प्राकृत गाथाओं के इस संकलन को संस्कृत कवियों तथा आचार्यों की परम्परा में समान आदर मिला। कुछ विद्वानों ने तो कालिदास को भी 'गाहासतसई' के कवित्व से प्रभावित मान लिया है, जो सन्देहास्पद है।[1] पर इसमें सन्देह नहीं कि अनेक परवर्ती कवियों पर 'गाहासतसई' के रचनासौष्ठव, शिल्प और सुघड़ अभिव्यक्ति की छाया है। अमरुक के कतिपय अतिशय भावप्रवण मुक्तकों में प्राकृत गाथाओं से भावसाम्य है।[2] आर्या या गीति छन्द में जीवन के अनुभव का निचोड़ प्रस्तुत करने की कला का विकास इस संवाद की प्रक्रिया में हुआ और 'सप्तशती' की परम्परा भी इसी से संस्कृत साहित्य में प्रवृत्त हुई। गोवर्धनाचार्य जैसे कवियों पर तो प्राकृत गाथाकाव्य का प्रभाव प्रत्यक्ष ही है।

इस परम्परा में अनेक कवि ऐसे हुए जिन्होंने संस्कृत और प्राकृत दोनों भाषाओं में समान अधिकार के साथ मुक्तक या महाकाव्य आदि की रचना की। आनन्दवर्धन ने 'देवीशतक' जैसी चित्रकाव्यमय प्रौढ रचना संस्कृत में की, तो प्राकृत में 'विषमबाणलीला' जैसा सरस प्रासादिक काव्य उन्होंने ही रचा और अपने इस काव्य से उन्होंने 'ध्वन्यालोक' में उद्धरण प्रस्तुत किये हैं। प्रवरसेन ने प्राकृत में 'सेतुबन्ध' जैसा प्रौढ महाकाव्य लिखा, तो संस्कृत में उनके स्फुट सुभाषित भी मिलते हैं। ठीक यही बात 'गउडवहो' महाकाव्य के कर्ता वाक्पतिराज के साथ भी है। राजशेखर ने तो अनेक भाषाओं में काव्य रच सकने की क्षमता को कवि के लिये बहुत स्पृहणीय बताया है,[3] और संस्कृतरचना की तुलना में प्राकृतकाव्यबन्ध को सुकुमार भी कहा है।[4]

---

१.२. विवरण के लिये इस ग्रन्थ का 'मुक्तक काव्य' शीर्षक अध्याय द्रष्टव्य।

३. यस्तु तत्र भाषाविशेषे तेषु प्रबन्धेषु तस्मिंश्च तस्मिन् रसे स्वतन्त्रः स कविराजः।
- काव्यमीमांसा, अ. ५, पृ. ४८

४. गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः। - बालरामायण १।११

